भवन्ति, तत्रैकेन्द्रियद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियसम्मूर्छजपञ्चेन्द्रियतिर्यक्षु सम्मूर्छजमनुष्येषु च नपुंसकवेद एव प्राप्यते, गर्भजतिर्यग्मनुष्येषु पुनस्त्रयोऽपि वेदा लभ्यन्ते, भवनपति व्यन्तरज्योतिष्क सौधर्मेशानसम्बन्धिनश्च देवा उपपातमाश्रित्य स्त्रीवेदपुरुषवेदभाजो भवन्ति, देवानां देवीनां चैतेषूत्पादात, सनत्कुमारादयस्तूपपाते पुरुषवेदका एव भवन्ति, देवीनां तत्रानुत्पादात्, सौधर्मेशानोत्पन्नास्तु देव्योऽच्युतकल्पान्तदेवानां परिभोगमायान्ति, अत सम्भोगमाश्रित्य द्वादशकल्पं यावत् स्त्रीवेदपुरुषवेदद्वयमपि प्राप्यते, ग्रैवेयकानुत्तरवर्तिन सुरा पुन सर्वेऽपि पुरुषवेदका, स्त्रीसम्भोगस्यापि तेषामभावादिति गाथार्थ ॥५९॥ उक्त स्वरूपेण स्वाश्रययुक्तोऽपि वेद, साम्प्रतं तत्रैव गुणस्थानलक्षणा जीवसमासा चिन्त्यन्त इत्याह—

**अनियट्टन्त नपुंसा सन्नीपंचिंदिया य थीपुरिसा । कोहो माणो माया नियट्टि लोभो सरागंतो ॥ ६० ॥**

'अनियट्टी'त्यादि, मिथ्यादृष्ट्यादीनि अनिवृत्तिरन्ते येषां तान्यनिवृत्त्यन्तानि नव गुणस्थानकानि '**नपुंस**'त्ति एकेन्द्रियादीन् जीवानाश्रित्य नपुंसकवेदे लभ्यन्ते, किं तस्मिन्नेव, नेत्याह '**सन्नीपंचिंदिये**'त्यादि, ये तु मिथ्यादृष्ट्याद्यनिवृत्त्यन्ता संज्ञिनो गर्भजा पञ्चेन्द्रिया जीवा ते '**थीपुरिस**'त्ति स्त्रीवेदे पुरुषवेदे च वर्तन्त इत्यर्थ, इदमुक्तं भवति अनिवृत्त्यन्तानि नव गुणस्थानकानि नानाजीवान् प्रतीत्य वेदत्रयेऽपि लभ्यन्ते, सूक्ष्मसम्परायादीनि त्वपगतवेदोदयान्येव मन्तव्यानीति एवं उक्तं वेदद्वारं, साम्प्रतं कषायद्वारमुच्यते, तत्र 'कष हिंसायां' इति हिंसार्थो दण्डकधातु, ततश्च कष्यन्ते नरकादिस्थानेषु प्राणिनोऽनेनेति कष कर्म, अथवा कषन्ति प्राणिन परस्परं हिंसन्तीति कष संसारस्तदर्थ त एव वा आयो लाभो येषां ते कषाया क्रोधमानमायालोभलक्षणा सुप्रतीता एव, अत एव सूत्रकारस्तान् निरूप्य प्रथममेव तेषु प्रस्तुतजीवसमासान् चिन्तयन्नाह—'**कोहो माणो माया ऽनियट्टि लोभो सरागंतो**'त्ति गाथोत्तरार्द्ध, मिथ्यादृष्ट्यादयोऽनिवृत्तिबादरान्ता नवैव जीवसमासा क्रोधमानमायालक्षणेषु त्रिषु कषायेषु वर्तन्ते, लोभकषायेषु पुनर्नव तावदेत एव प्राप्यन्ते, दशमस्तु सूक्ष्मसम्परायो, यत आह '**लोभो सरागंतो**' त्ति सह रागेण सूक्ष्मकिट्टीकृतलोभलक्षणेन वर्तत इति सराग सूक्ष्मसम्परायस्तत्र सूक्ष्मसम्पराये भावस्तदुत्तरलाभाभावलक्षणोऽन्तो व्यवच्छेदो यस्यासौ सरागान्तो लोभ, इदमत्र हृदयं क्रोधमानमायालक्षणकषायत्रयस्योदयोऽ-

निवृत्तिबादर एव व्यवच्छिद्यते, परतस्तु तदुदयाभाव एवेत्येतस्मिन् कषायत्रये यथोक्ता एव नव जीवसमासा प्राप्यन्ते, लोभकषायोदयस्तु सूक्ष्मसम्परायेऽपि भवत्यतस्तत्र सूक्ष्मसम्परायान्ता दश जीवसमासा लभ्यन्त इति गाथार्थ ॥ ६० ॥ उक्तं कषायद्वारमथ ज्ञानद्वारं विभणिषुराह—

ज्ञाने मतो च भेदा गा ६१ २

आभिणिबुओहिमणकेवलं च नाणं तु होइ पंचविहं । उग्गह ईह अवाया धरणाऽऽभिणिबोहियं चउहा ॥ ६१ ॥

ज्ञायते परिच्छिद्यते वस्त्वनेनेति ज्ञानं ज्ञातिर्वा ज्ञानं सामान्यविशेषात्मके वस्तुनि विशेषग्रहणात्मको बोध इत्यर्थ, तत् पुनर्ज्ञानमिह भीमो भीमसेन इत्यादिन्यायादेकदेशेन समुदायस्य गम्यमानत्वादाभिनिबोधिकश्रुतावधिमनःपर्यायकेवलभेदात्पञ्चविधं, तत्राभीत्याभिमुख्ये नीति नैयत्ये, ततश्चाभिमुखो वस्तुनो योग्यदशावस्थानापेक्षी नियत इन्द्रियाण्याश्रित्य स्वस्वविषयापेक्षी बोधोऽभिनिबोध स एव स्वार्थिकतद्धितोत्पादादाभिनिबोधिकं, अथवाऽभिनिबुध्यते परिच्छिनत्ति वस्त्वित्यभिनिबोध इति कर्तरि, यदिवाऽभिनिबुध्यते संवेद्यत आत्मना स इत्यभिनिबोध इति कर्मणि स एवाभिनिबोधिकमिति तथैव, तथा श्रवणं श्रुतं अभिलापप्लावितार्थग्रहणप्रत्यय उपलब्धिविशेष, अथवा श्रूयतेऽस्मादिति श्रुतं शब्द, स च कारणे कार्योपचारात् ज्ञानशब्दवाच्यो भवत्यत सोऽपि श्रुतमुच्यते, तथाऽवधानमवधि इन्द्रियाद्यनपेक्षमात्मन साक्षादर्थग्रहणम्, अथवाऽवधि-मर्यादा तेनावधिना रूपिद्रव्यमर्यादात्मकेन यज्ज्ञानं प्रवर्तते तदप्यवधिरुपचारादिति, तथा सञ्ज्ञिभिर्जीवै काययोगेनेत्यादिना पूर्वोक्तस्वरूपं मन पर्येति अवगच्छतीति कर्मण्यणि कृते मनःपर्यायमिति, तथा केवलं एकमसहायमसाधारणमनन्तमपरिशेषं चोच्यते, तत्र तद्भावे शेषछाद्मस्थिकज्ञानदर्शनाभावात् असहायं इन्द्रियमनःकृतसाहाय्यनिरपेक्षत्वनार्थपरिच्छेदात् असाधारणं त्वनन्यसदृशत्वात् अनन्तं त्वपर्यवसितकालावस्थायित्वात् अपरिशेषं तु सम्पूर्णमुच्यते सम्पूर्णद्रव्यादिज्ञेयग्राहित्वादिति, तदेतस्मिन् पञ्चविधेऽवग्रहेहापायधारणाभेदात्तावदाभिनिबोधिकं चतुर्द्धा भवतीति गाथार्थ ॥६१॥ अवग्रहादीनामपि भेदनिरूपणार्थमाह—

पचहिंवि इंदियेहिं मणसा अत्थोग्गहो मुणेयव्वो । चक्खिंदियमणरहियं वंजणमीहाइयं छद्धा ॥६२॥

अवग्रहो द्विधा व्यञ्जनावग्रहोऽर्थावग्रहश्च, तत्र व्यज्यते प्रकटीक्रियते शब्दादिरर्थोऽनेनेति व्यञ्जनं, किं तत् ?, उच्यते, उपकरणेन्द्रियस्य कदम्बपुष्पाकृते श्रोत्र

प्राणरसनस्पर्शनेन्द्रियस्य शब्दगन्धरसस्पर्शपरिणतद्रव्याणां च यः परस्परं सम्बन्धः प्रथममुपश्लेषमात्रं तदिह व्यञ्जनमुच्यते अपरे त्विन्द्रियेणाप्यर्थस्य व्यज्यमानत्वात्तदपी- न्द्रियमिह व्यञ्जनमभिप्रेत, ततश्च व्यञ्जनेन इन्द्रियलक्षणेन व्यञ्जनस्य विषयसम्बन्धलक्षणस्यावग्रहणं परिच्छेदनमेतस्य व्यञ्जनशब्दस्य लोपात् व्यञ्जनावग्रह, किमपीदमिय- व्यक्तानेकशब्दादिरूपमाथास्मदादयस्तदाऽव्यक्तज्ञानमात्रमित्यर्थः, अयं च नयनमनोवर्जेन्द्रियचतुष्टयभेदाच्चतुर्द्धा, नयनमनसोरप्राप्यकारित्वेन विषयसम्बन्धाभावात्, व्य- ञ्जनावग्रहस्य चेन्द्रियविषययोः सम्बन्धमाश्रित्य प्रवृत्तेरिति भाव, इदमाह सूत्रकार 'चक्खिदियमणरहिय चउहा'मिति चक्षुरिन्द्रियमनोरहित शेषेन्द्रियचतुष्टयविषयं व्यञ्जना- व्यञ्जनावग्रहो भवतीत्यर्थ, सर्वेण इति सर्वं शब्दरूपरसगन्धादिस्तस्य शब्दरूपादिभेदानामन्यतरेणापि भेदेनानिर्द्धारितस्य सामान्यरूपस्यावग्रहणमर्थावग्रह किमपीदमित्य- व्यक्तज्ञानमित्यर्थ, स च मनसहितेन्द्रियपञ्चकेन जायमानत्वात्, एतदाह सूत्रकार पचहिवि इदियेहि मणसा अत्थोग्गहो त्ति पञ्चभिरपीन्द्रियैर्मनसा च हेतुभूतेन य उत्पद्यते सोऽर्थावग्रह षड्विधो मुणितव्य, अनयोश्च जायमानयो पूर्व व्यञ्जनावग्रहस्ततोऽर्थावग्रह इति क्रम, सूत्रकारेण तु गाथाबन्धानुलोम्यादिकारणात्क्रमातिक्रमनिर्दे- शोऽव्यतिक्रमनिर्देश कृत इति भावनीयम्, ईहाइय छद्ध त्ति आदिशब्दादपायधारणापरिग्रह ततश्चाभिनिबोधिकस्येहापायधारणालक्षणमपि भेदत्रयमिन्द्रियपञ्चकमनोजन्य- त्वादेकैकस्य षड्विध मुणितव्य, तत्रार्थावग्रहेणावगृहीतस्यैव स्थाण्वादिवस्तुनोऽपि किमयं भवेत् स्थाणुरेव न तु पुरुष इत्यादिरूपेण वस्तुधर्मान्वेषणात्मकं ज्ञानचेष्टनमीहा, ईहामाहुरित्युक्त्वा 'अरण्यमेतत्सविताऽस्तमागतो, न चाधुना सम्भवतीह मानवः । प्रायस्तदेतेन खगादिभाजा, भाव्यं स्मरारातिसमाननाम्ना' ॥१॥ इत्याद्यन्वय- धर्मघटनव्यतिरेकधर्मनिराकरणाभिमुख्यालिङ्गिता ज्ञानविशेष ईहेति हृदयम्, ईहितस्यैव वस्तुन स्थाणुरेवायमित्यादिनिश्चयात्मको बोधविशेषोऽपाय, इत्थं निश्चितस्यै- वाविच्युतिवासनास्मृतिरूपा त्रिधा धारणा, तत्र चापायेन निश्चिते घटादिवस्तुनि तदुपयोगतोऽन्तर्मुहूर्तमविच्छेदनमविच्युति, एकदा घटादिरूपेण निश्चितस्य चार्थस्य हृद- यस्यानन्तरकालभाविनी असङ्ख्यातकालभाविनी वा पुनस्तद्दर्शने या निश्चययोग्यता सा संस्काररूपा वासना, पूर्वदृष्टस्य चार्थस्य कालान्तरे यत्पुनरनुस्मरणं सा स्मृतिरित्येव- मनेन त्रिधा भवतीति गाथार्थ ॥६२॥ तदेवं निरूपिता [सङ्क्षेपेन कतिचिदाभिनिबोधिकज्ञानभेदा विस्तरतस्तु सर्वेऽप्यावश्यकादिभ्यो विज्ञेया । अथ श्रुतावधि

॥ ५२ ॥ सागरोपमाणि भवन्ति, अनवस्थितप्रतिपक्षभूतं तु चलं यदन्तरङ्गाणामिव नैकत्र क्षेत्रेऽवतिष्ठते किन्तु अच्युतदेवादीनामिवान्यान्यक्षेत्रेषु संचरति, द्रव्यपर्यायेष्वप्यन्यान्येषु शीघ्रं वर्द्धते, लब्धितोऽप्युत्कृष्टां स्थितिमसमाप्यैव यदपगच्छति पुनश्च भवति तदिह सर्वं चलत्वेन विवक्षितमित्यर्थः, हीयमानं त्वपचीयमानं, सा च हीयमानता क्षेत्रतः कालतो द्रव्यतः पर्यायतश्च, तथाहि क्षेत्रकालावाश्रित्य किञ्चिदवधिज्ञानं प्रभूतविषयत्वेनोत्पद्य पश्चादसङ्ख्यातभागहान्या वा सङ्ख्यातभागहान्या वा सङ्ख्यातगुणहान्या वाऽसङ्ख्यातगुणहान्या वा हीयते न त्वनन्तभागहान्याऽनन्तगुणहान्या वा, क्षेत्रकालयोरनन्तयोरवधेरविषयत्वादेव, द्रव्याण्याश्रित्य पुनर्बहुविषयत्वेन संभूय पश्चादनन्तभागहान्याऽनन्तगुणहान्या वाऽपचीयते, द्रव्याणामनन्तानामवधिज्ञानेन दर्शनात्, यथा च पर्यायेषु षड्विधा हानिर्विद्यते तथा द्रव्ये न भवति, तत्स्वाभाव्यादिति, पर्यायानाश्रित्य प्रचुरविषयत्वेनाविर्भवतोऽनन्तभागहान्या वा असङ्ख्यातभागहान्या वा सङ्ख्यातभागहान्या वा सङ्ख्यातगुणहान्या वाऽसङ्ख्यातगुणहान्या वाऽनन्तगुणहान्या वा हीयते वा, अनन्तेषु द्रव्येष्वनन्तानामपि पर्यायाणामवधिगोचरत्वादिति, हीयमानप्रतिपक्षभूतं पुनर्वर्धमानकं, ततो वर्द्धमानतापि क्षेत्रकालद्रव्यपर्यायेषु वक्तव्या, तथाहि-क्षेत्रकालावाश्रित्य किञ्चिदवधिज्ञानं स्तोकविषयत्वेनोत्पद्य ततोऽसङ्ख्यातभागवृद्ध्या वा सङ्ख्यातभागवृद्ध्या वा सङ्ख्यातगुणवृद्ध्या वाऽसङ्ख्यातगुणवृद्ध्या वा वर्द्धते इत्यादि सर्वं हीयमानवद्वक्तव्यं, केवलं हानिस्थाने वृद्धिर्वक्तव्या, शेषं प्राग्वदेवेति। उक्ता अवधिज्ञानस्य षड् भेदाः, अथ मनःपर्यायज्ञानभेदानभिधित्सुराह-'**उज्जुमई**' त्यादि, '**मणनाणे**' त्ति विभक्तिव्यत्ययान्मनःपर्यायज्ञानं द्विविधम्-ऋजुमति विपुलमति चेति, तत्र मननं मतिर्विषयपरिच्छित्तिरित्यर्थः, ऋज्वी-अल्पतरविशेषविषयतया मुग्धा मतिर्यस्य तद् ऋजुमति, विपुला बहुतरविशेषविषयतया पट्वी मतिर्यस्य तद्विपुलमति, तत्र ऋजुमतेरर्द्धतृतीयाङ्गुलहीनो मनुष्यलोकः क्षेत्रतो विषयः, विपुलमतेस्तु स एव सम्पूर्णो निर्मलतरश्च, कालतस्त्वेतावति क्षेत्रे भूतभाविनः पल्योपमासङ्ख्येयभागवर्त्यतीतानागतानि सञ्ज्ञिमनोरूपाणि मूर्तद्रव्याणि, द्रव्यतोऽपि चैतान्येव द्रव्याणि, भावतस्तु तत्पर्यायाश्चिन्तनानुगुणपरिणतिरूपाः, चिन्तनीयं तु बाह्यमर्थं मूर्तममूर्तं वा त्रिकालगोचरमन्यनुमानादेव जानाति, यत एतत्परिणतान्येतानि मनोद्रव्याणि तत एतदन्यथानुपपत्तेरयमनेनार्थश्चिन्तित इति लेखाक्षरदर्शनात् तदुक्तार्थमिव प्रत्यक्षीकृत्य मनोद्रव्येभ्यश्चिन्तितमर्थमनुमिनोति न पुनः साक्षाज्जानाति, स चैष बाह्याभ्यन्तररूपो द्विविधोऽपि विषयोऽ- ॥ ५२ ॥

मव, तस्मान्मत्यज्ञानश्रुताज्ञानविभंगलक्षणमज्ञानत्रयमतास्त्व प्राप्यते न मिश्र, स्थानान्तरेषु च सर्वेषु प्रायोऽज्ञानि पनैषाय निर्दिष्ट इति तत्त्वार्थं, 'सम्मत्तसामिभिनिबुद्धाइ ति अवि रतसम्यग्दृष्ट्यादौ कृत्वा क्षीणकषायछद्मस्थमन्त यावत्तावत्सु नवसु गुणस्थानेष्वाभिनिबोधिकश्रुतावधिलक्षण ज्ञानत्रयं लभ्यत इत्यर्थः, 'विरयमण' ति विरत प्रमत्तसंयत पुन रादौ कृत्वा क्षीणकषायछद्मस्थमनान्ते विधाय सप्तसु गुणस्थानेषु चतुर्थं मन पर्यायज्ञानमपि प्राप्यते, मन पर्यायज्ञानस्य च प्रतिपत्ता सर्वोऽप्यप्रमत्त एव भवति तथाऽपि पूर्वप्रतिपन्न प्रमत्तोऽपि स्यादिति प्रमत्ते न सङ्गहो न विरुध्यते, 'केवलमनाम' ति समान नाम यस्यासौ समानाम तस्मिन् सनाम्नि केवलिनीत्यर्थः, केवल प्राप्यते, केवलज्ञान केवलज्ञानिनि लभ्यत इत्यर्थः, न च दर्शनस्य मत्यर्थिन समाननामता विरुध्यते, तात्त्विकाभेदस्याविवक्षितत्वादिति, न च केवली सयोग्ययोगिगुणस्थानकभेदाद् द्विधा, तत केवलज्ञानम- तस्मिन् गुणस्थानद्वये प्राप्यत इति तात्पर्यमिति गाथार्थः ॥ ६५ ॥ उक्तं ज्ञानद्वारमथ संयमद्वारमभिधीयते

अजया अविरयसम्मा देसविरया य हुंति सट्ठाणे। सामाइयछेयपरिहारसुहुमअहक्खायगो विरया ॥ ६६ ॥

अविरतसम्यग्दृष्टिगुणस्थानवर्तिन सर्वेऽप्ययता असंयता, मिथ्यादृष्टिसास्वादनसम्यग्मिथ्यादृष्ट्यविरतसम्यग्दृष्टिषु तावदसंयम एव प्राप्यत इत्यर्थः, देशविरतास्तु स्वस्थान एव भवन्ति, देशतो विरतिश्च तथा स्वस्थान, तत सप्तमासयमस्तेषु प्राप्यत इति हृदय, सामायिकच्छेदोपस्थापनापरिहारविशुद्धिकसूक्ष्मसम्परायथाख्यातचारित्रिणस्तु विरता सर्वविरतिसंयमिनो भवन्ति, इदमुक्तं भवति सामायिकादिषु पञ्चसु चारित्रेषु संयमो लभ्यते, देशविरतौ तु संयमासंयम, शेषेषु तु निर्दिष्टस्थानेष्वसंयम एवेति, किम्भूत पाणि पुनस्तानि सामायिकादीनि पञ्च चारित्राणि यानि संयमरूपत्वेन प्रतिपत्तव्यानि ? इति, अत्रोच्यते सम राग द्वेषरहितस्याद्यभिधीयते समस्यायो नाम समाय, समः प्रतिक्षणमपूर्वैर्विशुद्धसंज्ञानदर्शनचारित्रपर्यायैर्युज्यते भवति, समाय एव सामायिक, चारित्रावरणीयकर्मक्षयोपशमजन्य सर्वविरतिरूपो जीवपरिणामविशेष इत्यर्थः, पञ्चप्र- कारमपि च चारित्र सामान्येन सामायिकमुच्यते, केवल यत्र छेदोपस्थापनादयो विशेषा संभवन्ति तत्तैरेव विशेषैर्व्यपदिश्यते, यत्र तु ते विशेषा न संभवन्ति तन्निर्विशेषण सामान्येन सामायिकमुच्यते, तच्च द्विधा इत्वरं यावत्कथिकं च, तत्रेत्वरं स्वल्पकालिकमुच्यते तच्च भरतैरावतेषु प्रथमपश्चिमतीर्थकृतीर्थेष्वनारोपितव्रतस्य शिक्षकस्य विज्ञेय,

नवमादी गुण ... र ज्ञानानि ... ॥ ६६ ॥

यावत्कथिकं तु यावज्जीविकमुच्यते, तच्च भरतैरावतेषु मध्यमतीर्थकरतीर्थवर्तिनां विदेहतीर्थकरतीर्थान्तर्गतानां साधूनामवसेयं, तेषां व्रतोपस्थापनरूपाया उपस्थापनाया अभावा दिति १. छेदश्चोपस्थापना च यस्मिंस्तच्छेदोपस्थापनम्, एतदुक्तं भवति पूर्वपर्यायस्य छेदो महाव्रतेषु चोपस्थापनमात्मनो यत्र तच्छेदोपस्थापनं, तच्च सातिचारमनतिचारं च, तत्र सातिचारं मूलघातिनो यत्पुनर्व्रतारोपणम्, अनतिचारं तु यदित्वरसामायिकस्य शिक्षकस्योपस्थापनकाले महाव्रतारोपणादारोप्यते, तीर्थान्तरसङ्क्रान्तौ वा, यथा पार्श्वनाथतीर्थाद्वर्धमानस्वामितीर्थं सङ्क्रामतो साधोः पञ्चयामधर्मप्रतिपत्तौ छेदोपस्थापनमिति २ परिहरणं परिहारः तपोविशेषस्तेन विशुद्धिर्यस्मिंस्तत्परिहारविशुद्धिकं, तदपि द्विभेदं निर्विशमानकं निर्विष्टकायिकं च, तत्र निर्विशमानकास्तदासेवका उच्यन्ते, तदव्यतिरेकात्तदपि चारित्रं निर्विशमानकं निर्विष्टकायिकं आसेविततविवक्षितचारित्रकायो येषां ते निर्विष्टकायास्त एव स्वार्थिककप्रत्ययोपादानान्निर्विष्टकायिकास्तदव्यतिरेकाच्चारित्रमपि निर्विष्टकायिकम्, इह च नवको गणः स्वगच्छान्निर्गत्येदं तपः करोति, तत्र चत्वारः साधवः परिहारिका भवन्ति, अपरे तु तद्वैयावृत्त्यकराश्चत्वारः एवानुपरिहारिकाः, एकस्तु कल्पस्थितो वाचनाचार्यो, गुरुरूप इत्यर्थः, एतेषां च निर्विशमानकानां यः परिहारस्तपोरूपः स भाष्यगाथाभिरुच्यते तद्यथा—"परिहारियाण उ तवो जहण्ण मज्झो तहेव उक्कोसो। सीउण्हवासकाले भणिओ धीरेहिं पत्तेयं ॥ १ ॥ तत्थ जहन्नो गिम्हे चउत्थ छट्ठं तु होइ मज्झिमओ। अट्ठममिह उक्कोसो एत्तो सिसिरे पवक्खामि ॥ २ ॥ सिसिरे उ जहण्णाई छट्ठाई दसमचरिमगो होइ। वासासु अट्ठमाई बारसपज्जंतगो नेओ ॥ ३ ॥ पारणगे आयामं पंचसु गहो दोसऽभिग्गहो भिक्खे। कप्पट्ठियाइ पइदिण कुणंति एमेव आयामं ॥ ४ ॥ एवं छम्मासं तवं चरिउं परिहारिया अणुचरंति। अणुचरगे परिहारिय पयट्ठिए जाव छम्मासा ॥ ५ ॥ कप्पट्ठिओवि एवं छम्मासं तवं करइ सेसा उ। अणुपरिहारिगभावं वयंति कप्पट्ठियत्तं च ॥ ६ ॥ एवं सो अट्ठारसमासपमाणो उ वण्णिओ कप्पो। संखेवओ विसेसो सुत्ता एयस्स नायव्वो ॥ ७ ॥ कप्पसमत्तीए तयं जिणकप्पं वा उवेंति गच्छं वा। पडिवज्जमाणगा उण जिणस्सगासे पवज्जंति ॥ ८ ॥ तित्थयरसमीवासेवगस्स पासे व न उण अन्नस्स। एएसिं जं चरणं परिहारविसुद्धिगं तं तु ॥ ९ ॥" ३, संपरैति पर्यटति संसारमनेनेति सम्परायः कषायाः सूक्ष्मः किट्टीकरणतः सम्परायः कषायो यत्र तत्सूक्ष्मसम्परायं, तदपि द्विधा विशुध्यमानकं संक्लिश्यमानकं च, तत्र विशुध्यमानकं क्षपकोपशमश्रेणिद्वयमारोहतो भवति, संक्लि-

बकुशकुशीलनिर्ग्रन्थस्नातकरूपा पञ्च श्रमणा भवन्ति, अनन्तचरणपरिणामात्मकोऽपि नियमं समयतिरिति तमस्तमप्युपदर्शयितुं पुलाकादीन् श्रमणान् निरूपयन्नाह

**समणा पुलाय बउसा कुसील निग्गंथ तह सिणाया य । आइतिय सकसाई विराय छउमा य केवलिणो ॥ ९८ ॥**

श्राम्यन्तीति श्रमणाः साधवश्चारित्रिण, ते पुनस्त्रेधा इत्याह—'पुलाय बउसे' त्यादि, पुलाका बकुशाः कुशीला निर्ग्रन्थाः स्नातकाश्चेति, एतेषां च पुलाकादीनां सर्वेषां सामान्येनचारित्रसद्भावेऽपि मोहनीयकर्मक्षयोपशमादिवैचित्र्याद्भेदोऽवगन्तव्य, तत्र पुलाकाः निःसारं धान्यकणरूपस्य धान्यस्य कणास्तद्वत् वक्ष्यमाणयुक्त्या ज्ञानदर्शनचारित्राणि निःसारतया गमयन्तो यस्मात्ते पुलाकाः पुलाका इव पुलाका इतिकृत्वा, बकुशं शबलं कर्बुरं इत्यनर्थान्तरं, एवम्भूतं सातिचारत्वात्संयमाऽवाप्तिरेव, ततश्च बकुशसंयमयोगात्साधवोऽपि बकुशाः सातिचारत्वाच्छबलचारित्रिण इत्यर्थः, मूलोत्तरगुणविराधनात् संज्वलनकषायोदयाद्वा कुत्सितं शील—चारित्रं येषां ते कुशीलाः, निर्गता मोहनीयकर्मलक्षणाद् ग्रन्थादिति निर्ग्रन्थाः, घातिकर्ममलपटलक्षालनात्स्नाता इव स्नातकाः केवलिनः, तत्र पुलाका द्विविधा—लब्धिपुलाकाः प्रतिसेवापुलाकाश्च, तत्र लब्धिपुलाका लब्धिविशेषयुक्ता, यदाह—'संघाइयाण कज्जे चुण्णिज्जा चक्कवट्टिमवि जीए । तीए लद्धीए जुआ लद्धिपुलाया मुणेयव्वा ॥ १ ॥' अन्ये त्वाहुः—आसेवनतो यो ज्ञानपुलाकस्तस्यैवेदृशी लब्धिः, स एव च लब्धिपुलाकः, न तद्व्यतिरिक्तः कश्चिदपर इति, प्रतिसेवापुलाकास्तु पञ्चविधाः—ज्ञानदर्शनचारित्रप्रतिसेवका लिङ्गप्रतिसेवका यथासूक्ष्मप्रतिसेवकाश्च, आह च—'खलियाइदूसणेहिं नाणं संकाइएहिं सम्मत्तं । मूलुत्तरगुणपडिसेवणाइ चरणं विराहेइ ॥ १ ॥ लिंगपुलाओ अन्नं निक्कारणओ करेइ जो लिंगं । मणसा अकप्पियाणं निसेवओ होअहासुहुमो ॥ २ ॥'' इति, १, बकुशा अपि द्विधा—उपकरणबकुशाः शरीरबकुशाश्च, तत्र वस्त्रपात्राद्युपकरणस्य प्रक्षालनादिविभूषानुवर्त्तका उपकरणबकुशाः, करचरणमुखादिशरीरावयवानां समस्तशरीरस्य वा प्रक्षालनादिविभूषानुवर्त्तिनः शरीरबकुशाः, एते च द्विभेदा अपि सामान्यतः पञ्चविधास्तद्यथा आभोगबकुशा अनाभोगबकुशाः संवृतबकुशा असंवृतबकुशाः सूक्ष्मबकुशाः, तत्राभोगः—साधूनामकृत्यमेतच्छरीरोपकरणविभूषणमित्येवंभूतं ज्ञानं तत्प्रधाना बकुशा आभोगबकुशाः, तद्विपरीतास्त्वनाभोगबकुशाः, संवृताः सन्तो लोकेऽविज्ञातदोषाः संवृतबकुशाः, तद्विपरीतास्त्वसंवृतबकुशाः, सन्तोऽपिकापनयनादिसूक्ष्म-

पुलाकादिषु गुणस्थानकानि गा. ९८।

स्त्रीवेदा न सम्भवति, तद्रूपत्वेन पुलाकलब्धेरभावादिति, बकुशप्रतिसेवनाकुशीलाः पुनर्वेदत्रयेऽपि लभ्यन्ते, कषायकुशीला अपि श्रेणेरन्यत्र वेदत्रय एव वर्त्तन्ते, श्रेणावुपशान्तक्षीणवेदका अपि भवन्ति, निर्ग्रन्था स्नातकास्त्ववेदका एव १, चारित्रद्वारे पुलाकबकुशप्रतिसेवनाकुशीलाः सामायिकच्छेदोपस्थापनीयलक्षणे चारित्रद्वय एव लभ्यन्ते न शेषेषु, कषायकुशीलास्तु यथाख्यातवर्जं शेषचारित्रचतुष्टये वर्त्तते, निर्ग्रन्थस्नातकास्तु यथाख्यातचारित्रिणः २, प्रतिसेवनाद्वारे पुलाकप्रतिसेवनाकुशीला मूलगुणानामुत्तरगुणानां च प्रतिसेवका-विराधका, बकुशास्तूत्तरगुणानां विराधका, न मूलगुणानां, कषायकुशीलनिर्ग्रन्थस्नातका पुनरप्रतिसेवका एव ३, ज्ञानद्वारे पुलाकबकुशप्रतिसेवनाकुशीला मतिश्रुतावधिलक्षणे ज्ञानत्रये प्राप्यन्ते, न शेषे, कषायकुशीलनिर्ग्रन्थास्तु केवलज्ञानवर्जं शेषज्ञानचतुष्टये, स्नातकास्तु केवलज्ञानिन एव, पुलाकानां जघन्यतो नवमस्य पूर्वस्य तृतीयमाचारवस्तु उत्कृष्टतस्तु नव पूर्वाणि श्रुतं भवति, बकुशप्रतिसेवनाकुशीलानां तु जघन्यतोऽष्टप्रवचनमातृ श्रुतं उत्कृष्टतस्तु दश पूर्वाणि, कषायकुशीलनिर्ग्रन्थानामपि जघन्यतोऽष्टप्रवचनमातृ श्रुतं उत्कृष्टतस्तु चतुर्दश पूर्वाणि, स्नातकानां तु केवलित्वान्न श्रुतम् ४, कालद्वारे पुलाका अवसर्पिण्यां सुषमदुष्षमादुष्षमसुषमालक्षणयोस्तृतीयचतुर्थारकयोर्यत्र जन्म प्रव्रज्यां च प्रतिपद्यन्ते, चतुर्थारके गृहीतव्रतास्तु सत्तामाश्रित्य दुष्षमालक्षणे पञ्चमेऽप्यरके प्राप्यन्ते, उत्सर्पिण्यां तु दुष्षमादुष्षमसुषमासुषमदुष्षमालक्षणेषु द्वितीयतृतीयचतुर्थारकेषु जन्म लभन्ते, व्रतं पुनस्तृतीयचतुर्थारकयोरेवासादयन्ति, दुष्षमसुषमासदृशकालेषु महाविदेहक्षेत्रेषु पुनर्जन्मना व्रतेन च प्राप्यन्ते, बकुशप्रतिसेवनाकषायकुशीलाः पुनरवसर्पिण्यां सुषमदुष्षमादुष्षमसुषमादुष्षमालक्षणेषु तृतीयचतुर्थपञ्चमारकेषु जन्मना व्रतेन च प्राप्यन्ते, न शेषेषु, उत्सर्पिण्यां तु दुष्षमादुष्षमसुषमासुषमदुष्षमालक्षणेषु द्वितीयतृतीयचतुर्थारकेषु जन्म प्राप्नुवन्ति, व्रतं पुनस्तृतीयचतुर्थारकयोरेवासादयन्ति नान्यत्र, दुष्षमसुषमासदृशकालेषु महाविदेहक्षेत्रेषु जन्मना व्रतेन च सर्वदा लभ्यन्ते, देवादिभिरपहृता एते उत्सर्पिण्यवसर्पिण्योः सर्वेष्वप्यरकेषु लभ्यन्ते, तथा सुषमसुषमासदृशकालेषु देवकुरूत्तरकुरुषु सुषमातुल्यकालेषु हरिवर्षरम्यकेषु सुषमदुष्षमाप्रतिरूपकालेषु हैमवतैरण्यवतेषु दुष्षमसुषमासन्निभकालेषु महाविदेहक्षेत्रेषु चैते सर्वे लभ्यन्ते, निर्ग्रन्थस्नातकास्तु यथा पुलाकास्तथा वक्तव्याः, केवलमुपसंहरणं बकुशादीनामिव तेषामपि वाच्यं, ते ह्यप्राप्तनिर्ग्रन्थस्नातकभावाः पूर्वविराधितदेवादिना महाविदेहादिभ्योऽपहृत्य भरतादिषु क्षिप्यन्ते, तत्र च क्षिप्ता निर्ग्रन्थस्ना-

...श्रुतं ... भवन्ति, प्रमत्तनिर्ग्रन्थस्नातकयोस्तु समयं निवारितं, पुलाकानां तु सर्वथैव तन्निषिद्धं, यदाह—"समर्यामप्रमत्तेयं परिहारपुलायमप्पमत्तं च । ... संहरी ॥ १ ॥" सन्निकर्षद्वारे, पुलाकाद् बकुशप्रतिसेवनाकुशीलावनन्तगुणविशुद्धौ कषायकुशीलेन तु सहासौ षट्स्थानपतितः, निर्ग्रन्थस्नातकौ तु चारित्रगुणतः सदृशौ तुल्यौ, पुलाकादिभ्यस्तु सर्वेभ्योऽप्यनन्तगुणविशुद्धाविति ६, परिमाणद्वारे पञ्चदशस्वपि कर्म्मभूमिषु पुलाकाः कदाचिद् भवन्ति कदाचिन्न भवन्ति, यदा भवन्ति तदा जघन्यत एकादिः उत्कृष्टतस्तु सहस्रपृथक्त्वं, बकुशास्तु सर्वदैव प्राप्यन्ते, ते च जघन्यतः कोटिशतपृथक्त्वमुत्कृष्टतोऽपि कोटिशतपृथक्त्वम्, एवं प्रतिसेवनाकुशीला अपि वाच्याः, कषायकुशीलाः अपि सर्वदा लभ्यन्ते, ते तु जघन्यतः कोटिसहस्रपृथक्त्वमुत्कृष्टतोऽपि कोटिसहस्रपृथक्त्वं, निर्ग्रन्थाः कदाचित् प्राप्यन्ते कदाचिन्न प्राप्यन्ते, यदा प्राप्यन्ते तदा जघन्यत एकादिः उत्कृष्टतस्तु शतपृथक्त्वं, स्नातकाः पुनः सर्वदा भवन्ति, ते च जघन्यतः कोटिपृथक्त्वमुत्कृष्टतोऽपि कोटिपृथक्त्वमिति ७, एवं निरूपिताः पुलाकादयः पञ्चापि श्रमणाः, अथैतेषु भगवतीग्रन्थोक्तषट्त्रिंशद्द्वाराणां कषायद्वाराभिधानार्थं कषायद्वारं पुलाक एव निरूपयन्नाह—'माइनिय'मित्यादि, आदौ त्रिकमार्गाधिकृत-पुलाकबकुशकुशीललक्षणं 'सकसाइ'त्ति सह कषायैः सञ्ज्वलनकषायादिभिर्वर्त्तन्त इति सकषायं भवति, इदमुक्तं भवति-प्रतिसेवनाकषायकुशीलभेदाः कुशीलाः पूर्वं द्विधा प्रोक्ताः, तत्र पुलाकबकुशप्रतिसेवनाकुशीलास्तावच्छ्रेणिद्वयमपि नैव प्रतिपद्यन्ते, तथाविधविशुद्ध्यभावाद्, अतः सञ्ज्वलनक्रोधमानमायालोभलक्षणेषु चतुर्षु कषायेष्वेते वर्त्तन्ते, कषायकुशीलास्तु श्रेणिद्वयमपि प्रतिपद्यन्ते, सूक्ष्मसम्परायं यावत्कषायकुशीलव्यपदेशप्रवृत्ते अतः एषोऽपि सञ्ज्वलनेषु क्रोधमानमायालोभेषु वर्त्तते, क्रोधे तूपशमात्क्षपणाद्वाऽपगते मानमायालोभेषु, माने त्वपगते मायालोभयोः, मायायामपगतायां पुनर्लोभे वर्त्तते, ततो व्यवस्थितमिदं-यत्पुलाकबकुशकुशीलाः सकषाया एव भवन्ति, अकषायतायां निर्ग्रन्थस्नातकत्वप्राप्तेरिति भावः, 'छउमा य'त्ति छद्मस्थाश्चैते निर्ग्रन्था ग्रन्थे, अप्रमत्तत्वात्, ते च कथम्भूता भवन्ति ? इत्याह—'विराय'त्ति विगतः-क्षीण उपशान्तो वा मायालोभात्मको रागो येषां ते विरागा भवन्ति निर्ग्रन्थाः, विगतद्वेषा इत्यपि गम्यते, क्रोधमानात्मकद्वेषापगमे सत्येव यथोक्तरागापगमस्य समये निर्णीतत्वाद्, अतः स्थित-

तत्र गुणस्थानस्त्वमणा जीवसमासान्निन्तनीया', त च प्रस्तुतगाथया सूत्रकृताऽपि चिन्तिता अत एव व्याख्यायते 'चउरिंदिया' इति, चतुरिन्द्रिया आदिर्यस्य •पञ्चेन्द्रियादयो चतुरिन्द्रियादिर्मिथ्यादृष्टिरिति शेष, तत्श्चतुरिन्द्रियादिमिथ्यादृष्टेरारभ्य 'छउमे त्ति क्षीणकषायछद्मस्थ यावत् 'चक्खु त्ति चक्षुर्दर्शनं प्राप्यते, मिथ्यादृष्ट्यादिषु क्षीणमोहान्तेषु द्वादशसु गुणस्थानकेषु, चक्षुर्दर्शनं भवतीत्यर्थः, यदीह चतुरिन्द्रियादित्वेन चक्षुर्दर्शनाभावादिति मिथ्यादृष्टेर्विशेषणं तदेकेन्द्रियद्वीन्द्रियत्रीन्द्रियाणां मन्तव्यं, सयोग्ययोगिकेवलिनांस्तु चक्षुर्दर्शनं न सम्भवति, 'अतीन्द्रिया केवलिन इति वचनादिति अचक्खु य सव्वछउमत्थे त्ति सर्वस्मिन्नपि छद्मस्थेऽचक्षुर्दर्शनं तस्मात् इत्यर्थः इदमुक्तं भवति चक्षुर्दर्शनचिन्तायां य त्रीन्द्रियान्ता जीवा वर्जितास्तेष्वप्यचक्षुर्दर्शनमवाप्यतेऽन्येऽपि नेह वर्जनीया, स्पर्शनादीन्द्रियाणां तेषु सद्भावात्, तत्सद्भावे चाचक्षुर्दर्शनस्याप्यादत वात् एव च सयतनन्तरोक्तेषु द्वादशगुणस्थानेषु सामान्येनैव सर्वेषामचक्षुर्दर्शनमवाप्यत इतिस्थित, 'सम्मे य आइदु सि' त्ति अविरतसम्यग्दृष्टेरारभ्य क्षीणमोहगुणस्थानकं यावदवधिदर्शनमवाप्यत, एत केवलित्वेन मिथ्यादृष्ट्यादीना च विभङ्गज्ञानित्वेनावधेरभावात्, अपरे तु मिथ्यादृष्ट्यादीनामवधिदर्शनं प्रतिपद्यन्ते पर तन्मतमिह नास्ति, 'केवलदंसी सनामे य त्ति समानं नाम ययोस्तौ सनामानौ तयो सनाम्नो सयोग्ययोगिकेवलिनो केवलदर्शनं लभ्यते, केवलदर्शनिन शब्दो समाननामत्व केवलशब्दप्रवृत्तिमात्रेण वेदितव्यमिति गाथार्थ ॥६६॥ उक्त दर्शनद्वारमथ लेश्याद्वारमुच्यते, तत्र 'लिश श्लेषणे लिश्यते सश्लिष्यते:कर्मणा जीवो यकाभिस्ता लेश्या सकलकर्मप्रकृतिनिष्यन्दभूतकृष्णनीलकापोततेजःपद्मशुक्लवर्णद्रव्यसहायस्य जीवस्याशुभा शुभाश्च परिणामविशेषा इति हृदयं, यदाह "कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मन । स्फटिकस्येव तत्राय, लेश्याशब्द प्रयुज्यते ॥ १ ॥" एताश्च परिणामविशेषात्मिका लेश्या कृष्णा नीला कापोती तैजसी पद्मा शुक्ला इत्येवंभूतैर्नामभिर्विशेषिता षट् भवन्ति, तासु आद्यास्तिस्रोऽशुभा अपरास्तु शुभा, एतासा च विशेषत स्वरूपावगमार्थं जम्बूखादकदृष्टान्तो ग्रामघातकदृष्टान्तश्चोच्यते तत्र कस्मिन् महाकानने शुभाशुभ षट् पुरुषा सुविशेषविपक्वसरसफलप्राग्भारावनमितसकलशाखाग्रं सकलशाखाग्रनिलीनमत्तमधुकरमधुरारवापूर्यमाणसकलदिक्चक्रवाल सकलदिक्चक्रवाल मिलत्सुरभितगन्धोद्धसमारब्धबहलकोलाहलं शकुन्तसन्दोहसमारब्धबहलकोलाहलप्रीयमाणच्छायाविश्रान्तापहस्तितश्रमपथिकजनसमाजश्रवणयुगल युगलधर्मसमयस्मृतिसमाधान

कृष्णा नीला कापोती चेत्याद्य लेश्यात्रय मिथ्यादृष्टेरारभ्याविरतसम्यग्दृष्टयन्त भवति न परत, इदमुक्त भवति मिथ्यादृष्ट्याद्यविरतसम्यग्दृष्ट्यन्ता एव जीवा यथोक्तलेश्यात्रय वर्तन्ते न देशविरतादय., तेषा विशुद्धत्वात, लेश्याना चामूषामविशुद्धत्वादिति, 'संजयंतऽपरे'त्ति 'अपरे' अन्ये पुनराहु -सयतान्तमिद लेश्यात्रय भवति, मिथ्यादृष्टेरारभ्य प्रमत्तसयतगुणस्थानपर्यन्ता जीवा एतस्मिन् कृष्णादिलेश्यात्रये वर्तन्ते न त्वप्रमत्तादय इति भाव, देशविरतप्रमत्तावस्थायामपि तथाविधविशुद्धेरभावादिद लेश्यात्रय ते प्रतिपद्यन्त इति हृदयं, 'तेऊपम्हा सण्णऽप्पमाय'त्ति सज्ञिग्रहणेनात्र मिथ्यादृष्टिः सञ्ज्ञी गृह्यते, त मिथ्यादृष्टिसञ्ज्ञिपञ्चेन्द्रियमादौ कृत्वाऽऽरभ्यान्तर्गतस्येहादर्शनात् न विद्यते प्रमादो यस्यासौ अप्रमादः सयतस्तमन्ते व्यवस्थाप्य तैजसी पद्मा च लेश्या प्राप्यते, इदमुक्त भवति मिथ्यादृष्ट्यादिष्वप्रमत्तसयतान्तेषु सप्तसु गुणस्थानेषु वर्तमानस्य सञ्ज्ञिनो जीवस्य तैजसीपद्मालक्षणमपि लेश्याद्वय वर्तते, न त्वपूर्वकरणादिषु, तेषु शुक्ललेश्याया एवैकस्या सद्भावादिति, आह ननु शास्त्रान्तरेषु पृथिव्यब्वनस्पतीनामपि तैजसी लेश्या श्रूयते इह तु सञ्ज्ञिन एवासौ प्रोक्ता तत्कथ न विरोधः ? इति, अत्रोच्यते, इहानन्तरवक्ष्यमाणन्यायेन लेश्या द्विविधा भवन्ति द्रव्यतो भावतश्च, तत्रेशानान्ताना देवाना याऽसौ च द्रव्यतस्तैजसीलेश्या वक्ष्यते तद्युक्त एव कश्चिन्मिथ्यादृष्टिर्देवस्तेभ्यश्च्युत्वा पृथिव्यब्वनस्पतिषूत्पद्यते, तस्य च सा पूर्वभवसम्बन्धिनी तैजसी द्रव्यलेश्यैवेत्यत्र नाभिहिता, भावलेश्यानामेवेह गुणस्थानकेषु चिन्तयितुमभिप्रेतत्वात्, अथवा पृथिव्यादीनामपर्याप्तावस्थायामेवैषा भवति, न परतः, कृष्णाद्यशुभलेश्यापरावर्तनाद्, अतोऽल्पकालभावित्वेनेह नासौ निर्दिष्टेत्यविरोध इति, 'सुक्का सजोगंत'त्ति मिथ्यादृष्टिमादौ कृत्वा सयोगिकेवलिपर्यन्ता शुक्ललेश्या प्राप्यते, मिथ्यादृष्ट्यादिषु सयोगिकेवलिपर्यन्तेषु त्रयोदशसु गुणस्थानकेषु शुक्ललेश्या लभ्यत इत्यर्थ, अयोगिनाऽलेश्यत्वादिति गाथार्थ ॥ ७० ॥ अथास्मिन्नेव लेश्याद्वारे प्रस्तुते पृथिव्यादिजीवाना मध्ये कस्य कियत्य काश्च लेश्या सभवन्तीतिशिष्योपयोगित्वान्निरूपयन्नाह—

पुढविदगहरिय भवणे वण जोइसिया असंखनरतिरिया । सेसेगिंदियवियला तियलेसा भावलेसाए ॥ ७१ ॥

'पुढवी'त्यादि, पृथिव्युदकवनस्पतयस्तथाऽसुरकुमारादयो भवनपतयो व्यन्तराश्च प्रत्येक कृष्णानीलाकापोतीतैजसीलेश्याचतुष्टययुक्ता भवन्तीतिशेष,

तथा ज्योतिष्का केवलतैजसीलेश्यासमन्विता भवन्तीत्ययमप्युपस्कार, असङ्ख्येयवर्षायुषो युगलधर्मानुवर्तिनो नरास्तिर्यञ्चश्च कृष्णानीलाकापोतीतैजसीलक्षणलेश्याचतुष्टययुक्ता भवन्तीत्यत्राप्यध्याहार, शेषैकेन्द्रियास्तेजोवायुलक्षणा द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियलक्षणा विकलेन्द्रियाश्च कृष्णानीलाकापोतीलक्षणलेश्यात्रययुक्ता भवन्ति, आह ननु गाथापूर्वार्धे त्रिषु स्थानेषु लेश्याचतुष्कादिकोऽध्याहार कस्माल्लभ्यते ? यावतेदमेव गाथापर्यन्तोक्तकृष्णादिलेश्यात्रयमादित एवारभ्य सर्व्वेषामेव पृथिवीकायिकादीनामविशेषत कथ न ?, उच्यते, नैतदेव, पृथिव्यब्वनस्पतिभ्य शेषैकेन्द्रियाणामुत्तरार्धे भेदेनोपादानात्, यदि हि सर्वेषामिदमेव कृष्णादिलेश्यात्रयमभिप्रेत स्यात्तदैकेन्द्रियान् समुदितानेव निर्दिशेत, किं पृथग्निर्देशेन ?, तस्मादत एव भेदनिर्देशात्पूर्वार्धेऽध्याहारो गम्यते, स च प्रज्ञापनादिग्रन्थसंवादेन यथा निर्दिष्ट एव घटामियर्ति, न हि शास्त्र शास्त्रान्तरविसंवादेन व्याख्यायमानं प्रमाणतामध्यारोहतीत्यलमतिचर्च्चितेन, आह नन्वमी गाथोत्तरार्द्धेन निर्दिष्टास्तेजोवायुप्रभृतयो जीवा द्रव्यलेश्ययैव त्रिलेश्या भवन्तीत्युत भावलेश्ययापि ? इत्याशङ्क्याह—'**भावलेसाए**' त्ति अपिशब्दस्येह गम्यमानत्वान्न केवल द्रव्यलेश्यया त्रिलेश्या· अपितु भावलेश्ययाप्येते यथोक्तत्रिलेश्या एव भवन्ति न पुनर्वक्ष्यमाणन्यायेन देवादय इव भावपरावृत्त्या षड्लेश्या अपि भवन्तीति भाव, पृथिव्यब्वनस्पतयोऽपि द्रव्यलेश्यया यथोक्तकृष्णाद्यशुभलेश्यात्रययुक्ता एव मन्तव्या:, केवलमपर्याप्तावस्थाया पूर्वोक्तयुक्त्या तैजस्यपि चतुर्थी द्रव्यलेश्याऽमीषा द्रष्टव्या, भवनपतिव्यन्तराणा पुन पूर्वनिर्दिष्टाश्चतस्रो द्रव्यलेश्या एव द्रष्टव्या, ज्योतिष्काणामपि तैजसी द्रव्यलेश्यैवावगन्त्या, भावपरावृत्त्या पुनर्भवनपत्यादीना षडपि लेश्या वक्ष्यन्त इति भाव, असङ्ख्येयवर्षायुषस्तु नरतिर्यञ्चो द्रव्यलेश्यया भावलेश्यया च पूर्वोक्तचतुर्लेश्या एव मन्तव्या, अपरं चास्या गाथायामुपलक्षणव्याख्यानात्सङ्ख्येयवर्षायुषा गर्भजनरतिरश्चा द्रव्यतो भावतश्च षडपि लेश्या भवन्तीति द्रष्टव्य, सम्मूर्च्छजाना तु नरतिरश्चा कृष्णादिकास्तिस्रोऽशुभलेश्या इति मन्तव्यमिति गाथार्थ ॥ ७१ ॥ अथ नारकाणा सप्तस्वपि नरकपृथिवीषु क्रमेण लेश्या प्रतिपादयितुमाह—'काऊ' इत्यादि,

**काऊ काऊ तह काउनील नीला य नीलकिण्हा य । किण्हा य परमकिण्हा लेसा रयणप्पभाईणं ॥ ७२ ॥**

७०-१
नारकेषु लेश्याः
गा. ७२

'काऊ त्ति रत्नप्रभानारकाणामेका कापोत्येव लेश्या भवतीत्यर्थ 'काऊ त्ति शर्करप्रभानारकाणामपि सैवेत्यथ , परं क्लिष्टतरेति द्रष्टव्य, 'काउनील त्ति वालुकाप्रभाया कापोती नीला च लेश्या भवति, केषुचिदुपरितनेषु तत्प्रस्तटेषु कापोतलेश्या केषुचित्त्वधस्तनेषु नीललेश्येति भाव, 'नीला य त्ति चतुर्थ्यां पङ्कप्रभापृथिव्या नीललेश्यैव भवतीत्यर्थ , 'नीलकिण्हा 'य त्ति अत्रापि पञ्चमायां धूमप्रभापृथिव्या केषुचिदुपरितनप्रस्तटेषु नीललेश्या शेषेष्वधस्तनप्रस्तटेषु कृष्णलेश्या भवतीत्यर्थ , 'किण्हा य त्ति षष्ठपृथिव्यामेव कृष्णलेश्या भवति, 'परमकिण्हा य त्ति महातमःपृथिव्या परमकृष्णलेश्या भवति, सैव कृष्णलेश्या तस्या क्लिष्टतरा प्राप्यत इत्यर्थ , उक्तक्रमेण रत्नप्रभादिनारकाणामेता लेश्या भवन्तीति गाथार्थ ॥ ७२ ॥ अथ वैमानिकाना लेश्यानिरूपणार्थमाह—

तेऊ तेऊ तह तेऊ पम्ह पम्हा य पम्हसुक्का य। सुक्का य परमसुक्का सक्कादिविमाणवासीणं ॥७३॥

शक्र सौधर्माधिपतिरिन्द्रस्तदुपलक्षितत्वाद सौधर्मदेवलोक एव गृह्यते, ततश्च सौधर्मादिदेवलोकवर्तिनां विमानवासिना देवानां तेजस्यादिका लेश्या क्रमेण विज्ञेयास्तद्यथा—सौधर्मे तावत्तेजसी लेश्या भवति, ईशानेऽपि सैव, केवल किञ्चिद्विशुद्धतराऽसौ द्रष्टव्या, 'तह तेउपम्ह'त्ति सनत्कुमारे केषाञ्चिदल्पतरमहर्द्धीना स्वल्पतरदेवाना तेजसी शेषदेवाना तु पद्मलेश्यत्यर्थ 'पम्हा य'त्ति माहेन्द्रदेवलोके पद्मलेश्यैव केवलेति भाव 'पम्हसुक्का य' ब्रह्मलोकेऽपि बहूना देवानां पद्मलेश्यैव विशुद्धतरा प्राप्यते, कैश्चिदतिमहर्द्धिकाना स्वल्पदेवाना तु शुक्ललेश्याऽपि लभ्यत इत्यर्थ 'सुक्का य'त्ति लान्तकादिष्वच्युतपर्यन्तेषु देवलोकेषु नवसु च ग्रैवेयकेष्वेकैव शुक्ललेश्या प्राप्यते, केवल लान्तकान्महाशुक्रेऽसौ विशुद्धतरा द्रष्टव्या, ततोऽपि सहस्रारे विशुद्धतमत्येव यथोत्तरं विशुद्धा सौ मन्तव्या यावदुपरिमग्रैवेयकम् अनुत्तरविमानेषु पुन 'परमसुक्का परमशुक्ललेश्या अतिविशुद्धशुक्ललेश्या भवतीत्यर्थ , तदेव व्याख्याताऽसौ गाथा, पर—'किण्हा नीला काऊ तेऊलेसा य भवणवंतरिया। जोइससोहम्मीसाण तेउलेसा मुणेयव्वा ॥ १ ॥ कप्पे सणंकुमारे माहिंदे चेव बंभलोगे य। एएसु पम्हलेसा तेण परं सुक्कलेसा य ॥ २ ॥" इत्यादि प्रज्ञापनादिषु सनत्कुमारे पद्मलेश्यैव केवला निर्दिष्टा, ब्रह्मलोकेऽपि च सैव केवला प्रोक्ता, प्रस्तुतगाथाया तु सनत्कुमारे कियतामपि देवाना तेजस्यप्य

नारकदेवाना द्रव्यलेश्यावस्थिति गा. ७४

भिहिता ब्रह्मलोकेऽपि कषाञ्चिदमराणां शुक्ललेश्याऽपि प्रतिपादिता, यच्चात्र तत्त्वं तत्केवलिनो बहुश्रुता वा विदन्तीति, अन्ये पुनरेतां गाथामन्यथाऽपि व्याख्यानयन्ति, परं तद्व्याख्यानं प्रज्ञापनादिभिर्दूरविसंवादोत्युपेक्षितमिति गाथार्थः ॥ ३ ॥ इह भवनपत्यादीनां वैमानिकान्तानां देवानां नारकाणां च पूर्वं या कृष्णादिका लेश्याः केषाञ्चित्कथिदेव प्रतिनियताः प्रोक्तास्ता द्रव्यलेश्या एव द्रष्टव्याः, भावलेश्यास्तु प्रत्येकं सर्वेषां षडपि भवन्तीत्येतदिदानीं दर्शयितुमाह 'देवाणे'त्यादि,

**देवाण नारयाण य दव्वलेसा हवंति एयाउ। 'भावपरित्तीए उण नेरइयसुराण छल्लेसा ॥ ७४ ॥**

देवानां नारकाणां च 'एयाउ'त्ति या पूर्वं यथास्वं लेश्याः प्रोक्तास्ता एता द्रव्यलेश्या एव ज्ञातव्या भवन्तीत्यर्थः, भावस्य-लेश्याद्रव्योपष्टम्भितस्य चित्ताध्यवसायस्य पुनः परावृत्तौ परावर्तने नारकसुराणां सर्वेषामपि प्रत्येकं षडपि लेश्या भवन्तीति ज्ञातव्यम्, इदमत्र हृदयं-लेश्याशब्दः शुभाशुभे परिणामविशेषे व्याख्यातः, तस्य च परिणामविशेषस्य जनकानि सकलकर्मनिस्यन्दभूतानि द्रव्याणि जन्तूनां सदा सन्निहितानि सन्तीत्यपि पूर्वमेव सूचितं, तत्र कृष्णलेश्यापरिणामस्योत्पादकानि द्रव्याणि वर्णतोऽञ्जनपुञ्जादिसदृशकृष्णवर्णानि गन्धतो मृतगवादिशरीरगन्धादप्यनन्तगुणाशुभगन्धानि रसतः कटुकतुम्बकनिम्बरोहिणीरसादप्यनन्तगुणकटुकरसानि स्पर्शतः क्रकचस्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, नीललेश्यापरिणामजनकानि तु वर्णतश्चासपिच्छवैडूर्यमणिसमानवर्णानि गन्धतः कृष्णलेश्याद्रव्यवदेव नवरं तस्मात्किञ्चिदसौ शुभतरो मन्तव्यः, रसतस्त्रिकटुकहस्तिपिप्पलीरसादप्यनन्तगुणतिक्तरसानि स्पर्शतो गोजिह्वास्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, कापोतलेश्यापरिणामनिर्वर्तकानि तु वर्णतस्तैलकण्टककोकिलशरीरपारापतग्रीवादितुल्यवर्णानि गन्धतो नीललेश्याद्रव्यवदेव केवलं तस्मादयं मनाग्विशुद्धतरोऽवगन्तव्यः, रसतस्तरुणाम्रफलतुवरकपित्थरसादप्यनन्तगुणाशुभरसानि स्पर्शतः शाकपत्रस्पर्शादप्यनन्तगुणकर्कशस्पर्शानि भवन्ति, तेजोलेश्यापरिणामसम्पादकानि तु वर्णतो हिङ्गुलप्रवालदिनकरशुकमुखदीपशिखासदृशवर्णानि गन्धतस्तु सुरभिकुसुममृद्यमानगन्धद्रव्यतुल्यसुरभिगन्धान्वितानि रसतः परिपक्वाम्रफलसुपक्वकपित्थरसादप्यनन्तगुणशुभरसानि स्पर्शतस्तु बूरनवनीतशिरीषकुसुमस्पर्शादप्यनन्तगुणकोमलस्पर्शानि भवन्ति, पद्मलेश्यानिर्वर्तकानि तु वर्णतश्चूर्णितहरिद्रासणकुसुमसदृशवर्णानि गन्धतस्तेजोलेश्यावदेव नवरं शुभतरोऽत्र वक्तव्यः रसतः सुसंस्कृतद्राक्षासवादिभ्योऽप्यन

न्तगुणशुभरसानि स्पर्शतस्तु तेजसलेश्यावद्वक्तव्या नवरं कोमलतमोऽत्र द्रष्टव्य, शुक्ललेश्याहेतुभूतानि तु द्रव्याणि वर्णत शङ्खकुन्दक्षीरहारादिसमानवर्णानि गन्धतस्तैजसलेश्यावदेव नवरं शुभतमोऽत्र द्रष्टव्य, रसतस्तु खर्जूरद्राक्षाक्षीरशर्करादिभ्योऽनन्तगुणशुभरसानि, स्पर्शतस्तु तैजसलेश्यावदेव नवरं कोमलतमोऽत्र वाच्य इति। एवं च सत्यतैः कृष्णादिद्रव्यैर्जीवस्य ये परिणामविशेषा जन्यन्ते मुख्यतया त एव लेश्याशब्देनोच्यन्ते, गौणवृत्त्या पुन कारणे कार्योपचारलक्षणया एतान्यपि कृष्णादिद्रव्याणि लेश्याशब्देन व्यपदिश्यन्ते, तत्र कृष्णादिद्रव्याणि द्रव्यरूपा लेश्या द्रव्यलेश्या इति निर्दिश्यन्ते, ततो भवनपतिव्यन्तराणां या. कृष्णानीलाकापोतीतैजसीलक्षणाश्चतस्रो लेश्या उक्तास्ता द्रव्यलेश्या एव द्रष्टव्या, यस्यचिद्देवस्य जन्मत आरभ्य पर्यन्तं यावत्कृष्णलेश्याद्रव्याण्येवोदितानि प्राप्यन्ते कस्यचिन्नीललेश्याद्रव्याण्येव कस्यचित्कापोतलेश्यान्यत्र कस्यचि दाजन्मत एवावसानं यावत्तैजसलेश्याद्रव्याण्येवोदयवन्ति लभ्यन्ते, न तु पद्मलेश्याशुक्ललेश्याद्रव्याणामवस्थितोदय कस्यापि देवस्येत्यर्थः, एवं शेषदेवानां नारकाणां च मध्ये या यस्य पूर्वं लेश्या प्रोक्ता सा तस्य द्रव्यलेश्या द्रष्टव्या, तत्तल्लेश्याद्रव्याणि तस्य देवस्य नारकस्य वा सर्वदैवावस्थितोदयानि द्रष्टव्यानीति तात्पर्य, भावमाश्रित्य पुन सर्वेषां देवनारकाणां षडपि लेश्या भवन्तीति, आह-ननु भावोऽपि द्रव्यलेश्याजन्यत्वेनैव निर्दिष्टो, यदि च द्रव्याणि तेषां षट्प्रकाराणि न संभवन्ति तर्हि भावोऽपि षट्प्रकार कथ स्यात्? कारणमन्तरेण कार्यस्य भवतो निर्हेतुकत्वप्रसङ्गात्?, सत्य, किन्त्ववस्थितोदयत्वमाश्रित्य यानि यस्योक्तानि द्रव्याणि तान्यत्र तस्य भवन्ति, कादाचित्कत्वेन तूदयन अपरितेभ्योऽन्यान्यपि तानि तेषामुदये प्राप्यन्त एव, तथाहि-सप्तमनरकपृथिव्यां सर्वदा कृष्णलेश्याद्रव्याण्यवस्थितोदयानि प्राप्यन्ते, कदाचित्तु सम्यक्त्वलाभादिकाले तैजस्यादिलेश्याद्रव्याण्यप्युदयमागच्छन्ति, ततस्ते सम्यक्त्वादिभाव प्रतिपद्यन्ते, अवश्यं चैतदङ्गीकर्त्तव्यमन्यथा सम्यक्त्वलाभस्तेषां समये य प्रोक्तः स नोपपद्येत, अशुभलेश्यापरिणामे तदसम्भवादिति, आह—यद्येवं तर्ह्यवस्थितागन्तुकलेश्याद्रव्यजन्यपरिणामद्वयस्यैककालं सद्भाव प्रसज्यते, न च युगपत्परस्परविरुद्धपरिणामद्वयसत्ता समयेऽभ्युपगम्यते, युक्त्या वा सङ्गच्छते, सत्य, यान्यागन्तुकलेश्याद्रव्याणि कदाचिदुदयमागच्छन्ति तैरवस्थितलेश्याद्रव्याणि प्रतिहतसामर्थ्यानि तथा विधीयन्ते यथा स्वजन्य परिणामं जनयितुं न शक्नुवन्ति, ततश्चागन्तुकलेश्याद्रव्योदयकाले तज्जन्य एवैक परिणाम संभवति, तत्कुतः परिणामद्वयसद्भाव? इति, आह—यद्येवं तर्हि नारकदेवानां याऽवस्थिता

कृष्णलेश्या प्राप्ता सा निरुध्यते, आगन्तुकलेश्याद्रव्योदयेनापि तत्प्रतिघातात्, नैतदेवं, आगन्तुकलेश्याद्रव्योदयकालेऽवस्थितलेश्याद्रव्याणि तदाकारमात्रमेव प्रतिपद्यन्ते न पुनः सर्वथा स्वरूपं परित्यज्य स्वरूपान्तरं प्रतिपद्यते येनावस्थितोदयत्वं निरुध्यते, तदुक्तं प्रज्ञापनायां— 'से नूणं भंते! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए नो तावन्नत्ताए नो तागंधत्ताए नो तारसत्ताए नो ताफासत्ताए भुज्जो भुज्जो परिणमइ?, हंता गोयमा! किण्हलेसा नीललेसं पप्प नो तारूवत्ताए'' इत्याद्यभ्युपगमतः सर्वं प्रत्युच्चारणीयं यावत्पर्यन्ते 'भुज्जो भुज्जो परिणमइ' त्ति, अत्र गौतमो यावत्त्वं प्रतिपादयति, अवस्थितोदया कृष्णलेश्या आगन्तुकनीललेश्याद्रव्योदये तद्रूपवर्णगन्धरसस्पर्शतां न प्रतिपद्यते इत्यर्थः, एवं भगवता निर्वचने प्रदत्ते पुनरपि गौतमः पृच्छति 'से केणट्ठेणं भंते! एवं वुच्चइ किण्हलेसा नीललेसं पप्प नो तारूवत्ताए जाव परिणमइ' अत्र भगवान् कारणमाह— 'आगारभावमायाए वा सिया पलिभागभावमायाए वा से सिया, किण्हलेसा णं सा नो खलु नीललेसा तत्थ गया ओसक्कइ' त्ति, आकारः—आगन्तुकनीलादिलेश्यासम्बन्ध्याभासः, अत्यासन्ने जपाकुसुमादिके वस्तुनि स्फटिकस्य तत्प्रतिच्छायावत्, आकार एव भावः पदार्थ आकारभावः स एव तन्मात्रं तेनाकारभावमात्रेणैवासाववस्थिता कृष्णलेश्या आगन्तुकनीललेश्यारूपा स्यात् न पुनस्तद्रूपतयेत्यर्थः तथा प्रतिरूपो भागः प्रतिभागः प्रतिबिम्बमित्यर्थः तस्मिन्नेव जपाकुसुमादिके वस्तुन्यत्यासन्ने दर्पणसङ्क्रान्ततत्प्रतिबिम्बवत् प्रतिभाग एव प्रतिभागमात्रं तेनैवावस्थितलेश्याऽऽगन्तुकलेश्यारूपा स्यात् न तु सर्वथेत्यर्थः, इदमुक्तं भवति—प्रथमं मन्दतरे आगन्तुकलेश्योदयेऽवस्थितलेश्या तदाभासमात्रमेव प्रतिपद्यते, ततः प्रकर्षं गच्छत्यागन्तुकलेश्योदये इतरा तत्प्रतिबिम्बमात्रमेव प्रतिपद्यते, विशिष्टतरं तदाकारं प्रतिपद्यत इत्यर्थः, सर्वथा तु निजस्वरूपं परित्यज्य तद्रूपतामेव नासादयतीत्यतः कृष्णलेश्यैव स्वरूपेण सा न तु नीललेश्या, उत्सरति तत्र गतात्सर्पति, किमुक्तं भवति?—तत्रैव स्वकीयस्वरूपेऽवस्थिता नीलादिलेश्यान्तरं प्राप्य समुत्सर्पति, किञ्चित् शुभं तदाकारभासमात्रं वा तत्प्रतिबिम्बमात्रं वा प्रतिपद्यत इत्यर्थः, एवं कृष्णलेश्यायाः कापोतलेश्यादिभिरप्यालापका वाच्याः, तद्यथा —'से नूणं भंते! किण्हलेसा काउलेसं पप्प'-इत्यादि, तथा 'तेउलेसं पम्हलेसं सुक्कलेसं पप्प' इत्यादि, तदेवं कृष्णलेश्यामवस्थितोदयामाश्रित्यैतदुक्तं, यदा तु नीललेश्याऽवस्थितोदया भवति तदाऽधस्तन्या कृष्णलेश्यया सह उपरितनीभिः कापोतलेश्यादिभिः सहालापका वक्तव्याः, यथा— 'से नूणं भंते! नीललेसा किण्हलेसं पप्पे' इत्यादि नीललेसा काउलेसं तेउलेसं पम्हलेसं

लेश्यानामाका भावादि।

